४०. श्रुताप्सर इत्यादि ॥ अस्मिन् क्षणे वसन्ताविर्भावसमये हरः भगवानीशः (श्रुताप्सरोगीतिः) निशमित सुरललनागेयध्वनिः अपि प्रसंख्यानपरः समाधि - निष्ठः (बभूव) आसीत् । न त्वन्यत्रगतमनाः। यस्माद् ये (आत्मेश्वराः) आत्मन (श्चित्तस्येश्वरा वशिनस्तेषां वसन्तादि उत्सवादयो विघ्नाः श्रेयःप्रत्यूहाः (समाधिभेद -प्रभवः) समाधिभेदे नियमभङ्गे एकाग्रताभङ्गे प्रभवः शक्ता न कदाचिदपि (भवन्ति) सम्पद्यन्ते । आत्मशब्देनात्र षडिन्द्रियाणि लक्ष्यन्ते ॥४०॥

४१. लतागृहेत्यादि ॥ (अथ) ततः नन्दी प्रतीहारः (गणान्) प्रमथान् मुखार्पितै -काङ्गुलिसंज्ञया) वदननिहिततर्जनीसंकेतेन एव मा (चापलाय) चापलार्थं मा इति व्यनैषीत् न्ययमयत् । न किञ्चिद् व्याहर्तव्यम् । अकारणे प्रयत्नः कीदृशः। असौ (नन्दी) लतागृहद्वारि गतः लतागृहस्य द्वारदेशे गतोऽवस्थितः प्रतीहारत्वात्, तस्य तथा (वामप्रकोष्ठार्पितहेमवेत्रः) वामप्रकोष्ठे गोलके कर्पूरांशमध्येऽर्पितो निहितो हेम्नः सुवर्णस्य वेत्रं दण्डो येन । वेत्रं दारुविशेषस्तं च बाहुल्येन द्वास्था गृह्णन्ति । सौवर्णादौ त्वौपचारिको वेत्रशब्दस्य व्यवहारः । 'प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः'। **अत्र चारुच्यर्थ प्रतिभासादेकाङ्गुलि शब्दस्य प्रयोगं न साधु मन्यते । मूत्रोत्सर्गे ह्येकाङ्गुलिशब्दसंकेतः** ॥४१॥

४२. निष्कम्पवृक्षमित्यादि ॥ ततो नन्दिनिर्देशात् (सर्वम्) अखिलम् एव (काननं) वनं (चित्रार्पितारम्भम्) आलेख्यलिखितसंस्थानम् इव (अवतस्थे) संजातम् । तथा हि । (निष्कम्पवृक्षं) निश्चलानौकहं निभृतद्विरेफं विनीतचञ्चरीकं मूकाण्डजं निःशब्दशकुनिं (शान्तमृगप्रचारं) निवृत्तहरिणादिभ्रमणम् । '**समवप्रविभ्यः स्थः**'। (पा.सू.१-३-२२) इति वचनादवतस्थ इत्यात्मने-पदम् ॥४२॥

४३. दृष्टिप्रदीपमित्यादि ॥ ततः(कामः) मदनः(भूतपतेः) शिवस्य (ध्यानास्पदं) समाधिस्थानं (विवेश) अविशत् । (तस्य) भगवतः (दृष्टिप्रदीपं) नेत्रज्योतिः





पुरःशुक्रम् इव प्रयाणे परिहत्य यथाऽसौ पुरो न पश्यतीत्यर्थः। विजिगीषोरपि यात्रायां सम्मुखो भार्गवो नेक्षते । यदुक्तम् —

**'प्रतिशुक्रं प्रतिबुधं प्रत्यंगारकमेव च ।**
**अपि शक्रसमो राजा हतसैन्यो निवर्तते ॥'**

कीदृशम् । प्रान्तेषु पर्यन्तेषु (संसक्तनमेरुशाखं) संसक्ता लग्ना नमेरुतरु-शाखा यत्र ॥४३॥

४४. स देवदार्वित्यादि ॥ स कामः तत्र संयमिनं नियमस्थं ध्यानासक्तं त्रियम्बकं त्रिनेत्रं (ददर्श) अद्राक्षीत् । कीदृशम् । (देवदारुद्रुमवेदिकायां) देवदारुद्रुमस्य वेदिकायाम् अधस्थल्यां (शार्दूलचर्मव्यवधानवत्यां) व्याघ्राजिनाच्छा- -दितायां, शार्दूलः चित्रको वा । आसीनम् उपविष्टम् (आसन्नशरीरपातः) आसन्नो निकटः शरीरपातो देहध्वंसो यस्येति कामविशेषणमिदम् । पादपूरणार्थम् इयादीनां छन्दसि विधानात् भाषायां त्रियम्बकशब्द इति प्रयोगो दुर्लभः । (तस्मात्) 'महेश्वरम्' इति पठनीयम् । त्रिलोचन इत्युपरचितपदन्यासेन तृतीय-नेत्रत्वात्कामदेहदाहं सूचयति ॥४४॥

४५. पर्यङ्कबन्धेत्यादि॥ त्र्यम्बकं ददर्शेत्युक्तम् । तत्र तं कीदृशम् । (पर्यङ्कबन्ध स्थिरपूर्वकायं) पर्यङ्कबन्धेन वासुकिपर्यस्तिकारचनया स्थिरो निश्चलः पूर्वकायो यस्य तम् । पूर्वकायः पूर्वभागः । पर्यङ्को नामासनविशेषः। तथा (ऋज्वायतासन्नमितो -भयांसम्) ऋजू स्पष्टौ आयतौ विशालौ आ ईषत्सन्नमितौ सम्यक् अन्यूनाधिकतया नमितौ उभौ अंसौ यस्य येन वा तम् । तथा (उत्तानपाणिद्वयसंनिवेशात्) उत्तानस्योर्ध्वमुखस्य हस्तद्वयस्य सन्निवेशात् संस्थानाद्धेतोः (अङ्कमध्ये) उत्संगान्तरे (प्रफुल्लराजीवमिव) विकसितं नलिनम् इव प्रफुल्लं राजीवं यस्य तत् तथाविधमिति ॥४५॥

४६. भुजङ्गमोन्नद्धेत्यादि॥ अन्यच्च कीदृशम् । भुजङ्गमोन्नद्धजटाकलापं भुजङ्गमेनाहिना उन्नद्धं ऊर्ध्वं बद्धो जटाजूटो यस्य येन वा तं तद् वा ।

(कर्णावसक्तद्विगुणाक्षसूत्रं) कर्णेऽवसक्तं लगितं निहितं द्विगुणं द्विगुणीकृतमक्षसूत्रं जपमालिका येन तम् । अक्षपूर्णं सूत्रमक्षसूत्रं द्विगुणत्वं च तस्य सूत्रे ग्रन्थिवशाद् द्विगुणीकृत्य (कर्णे) प्रवेशात्। तथा (मृगत्वचं) मृगस्य त्वक् हरिणस्य चर्म दधानम् । कीदृशीं त्वचम् (ग्रन्थिमतीं) ग्रन्थिर्विद्यते यस्यास्तां ग्रन्थिना प्रावृताम् । (कण्ठप्रभासङ्गविशेषनीलां) कण्ठकान्त्युपलेपेन चाधिकनीलाम् ।।४६।।

४७. किञ्चित्प्रकाशेत्यादि।। अन्यदपि कीदृशं तम् । (नेत्रैः) नयनैः लक्षीकृतघ्राणं विषयीकृतनासिकाग्रम् । कीदृशैः । किञ्चित् ईषत् संकुचितपुटत्वात् (प्रकाश स्तिमितोग्रतारैः) **प्रकाश्या दृश्या** स्तिमिता निश्चला उग्रा उद्भटा तारा कनीनिका चक्षुर्गोलकानि येषां तैस्तथा (भ्रूविक्रियायां) भ्रूवोर्विक्रियायां ध्यानासक्तत्वात् (विरतप्रसङ्गैः) विरतोऽपगतः प्रसङ्गो येषां तैः तथा (अविस्पन्दितपक्ष्ममालैः) अविस्पन्दिता निश्चलाः पक्ष्ममाला नयनावरणलोमलेखा येषां तैः। एवं (लक्षीकृत घ्राणमधोमयूखैः) लक्षीकृतघ्राणत्वादधस्तान्मयूखा रश्मयो येषां तैः।।४७।।

४८. अवृष्टिसंरम्भेत्यादि ।। अथ किम्भूतम् । (अन्तश्चराणां) देहान्तश्चारिणां (मरुतां) वायूनां प्राणापानव्यानोदानसमानलक्षणानां निरोधात् नियमनात् प्रणाशादेवंविधम् इव निश्चलं तं ददर्श । कथमिवेत्याह । (अवृष्टिसंरम्भमिवाम्बु--वाहम्) अविद्यमानं वर्षाटोपं जलदम् इव । तथा (अनुत्तरङ्गम्) अनुद्गतकल्लोलम् (अपां) जलानाम् आधारं जलनिधिम् इव । अनुद्गतास्तरङ्गा यस्य तमनुत्तरंगम्। तथा (निर्वातनिष्कम्पं) निर्वाते वाताभावे सति स्थिरं प्रदीपम् इव प्रद्योतकमिव ।।४८।।

४९. कपालनेत्रेत्यादि ।। अन्यदपि किम्भूतम् । बालस्य कलामात्रशेषस्य शेखरीकृतस्य इन्दोः लक्ष्मीं कान्तिं ग्लपयन्तं तिरोदधानम् । कैः शिरस्तः उत्तमाङ्गात् उदितैः निर्यातैः (ज्यौतिष्प्ररोहैः) ज्योतिषां तेजसां प्ररोहैरङ्कुरैः । कीदृशैः। (कपालनेत्रान्तरलब्धमार्गैः) कपालानि नरशिरांसि तेषां यानि नेत्राणि नयनरन्ध्राणि तैर्लब्धः समासादितः पन्था यैः। लक्ष्मीं कीदृशीम् । (मृणालसूत्राधिक





सौकुमार्यां) मृणालसूत्रेभ्यो बिसतन्तुभ्योऽधिकमतिरिक्तं सौकुमार्यं कोमलता यस्यास्ताम् । ज्योतिष्प्ररोहैरिति **'नित्यं समासे'** (पा.सू.८-३-४५) इति षत्वम् ।।४९।।

५०. मनोनवेत्यादि ।। तमात्मानं देहस्थं आत्मनि स्ववपुषि पश्यन्तम् । कं तमित्याह । क्षेत्रविदो योगिनो यमक्षरमविनाशिनं परं ब्रह्मरूपं विदुर्जानन्ति। किं कृत्वा । अवलोकयन्तम् । मनो हृदये निवेश्य । अत एव करनेत्रश्रोत्रास्यनासि--कास्तननाभिभिः पायूपस्थयुतैः द्वारैः नवभिर्वपुभिः इत्येतेषु नवद्वारेषु निषिद्धवृत्ति निवर्तितप्रसरम् । यतः समाधिना एकाग्रतया वश्यम्, आयत्तम् । कुलकम् ।।५०।।

५१. स्मरस्तथेत्यादि ।। ततो मदनः ईदृशं (मनसा अपि अधृष्यम्) चेतसाप्यनभिभाव्यं (अदूरात्) निकटादवलोक्य (साध्यसस्रस्तहस्तः) भयात् कम्पमानकरत्वात् शरावापं सायकयष्टिं धनुरात्मपाणेर्भ्रष्टमपि संभ्रमवशान्नाचेतयत् । शराः उप्यन्तेऽनेनेति शरवापः। बाहुलकाच्चेति घञ् ।।५१।।

५२. निर्वाणेत्यादि ।। अथास्मिन्नवसरे सखीद्वयानुगता पार्वती अदृश्यत । भगवत्सेवार्थमागतेत्यर्थः। अस्य स्मरस्य वीर्यं बलं निर्वाणभूयिष्ठं प्रशांतप्रायम् अपि वपुर्गुणेन शरीरसौन्दर्येण संधुक्षयन्तीवोद्दीपयन्तीव यथा आलम्बनविभाव-संपत्तेः। निर्वाणशब्दोऽवाते निष्ठायाम् '**निर्वाणोऽवाते** (पा.सू. ८-२-५०) इति **नत्वम्,** अतिशयेन बहु भूयिष्ठं सुप्सुपेति समासः । **'बहोर्लोपो भू च बहोः'** (पा.सू. ६-४-१५८) **'इष्टस्य यिट् च'** (पा.सू. ६-८-१५९) । निर्वाणेन भूयिष्ठं निर्वाणभूयिष्ठमिति तृतीयासमासः ।।५२।।

५३. अशोकेत्यादि ।। कीदृशी गौरी । (वसन्तपुष्पाभरणम्) वासन्तिकपुष्पाण्ये-वाग्राम्यमलंकरणं ब्रिभ्रत्यदृश्यतेति सम्बन्धः। कीदृशं तत् । (अशोक .... रागम्) अशोकपुष्पैः लोहितत्वात् निर्भत्सितस्तिरस्कृतः पद्मरागमणिर्यत्र । तथापि (आकृष्ट .... कारम्) पिशङ्गत्वादाकृष्टा आनीता हेम्नः सुवर्णस्य द्युतिः कान्तिर्येन

तत्तथाविधं कर्णिकारं यत्र। (मुक्ता...वारम्) सितत्वाच्च मुक्ताकलापीकृतं सिन्धुवारं यत्र। मौक्तिकसुवर्णपद्मरागाः किलाभरणतया प्रसिद्धाः॥ ५३ ॥

५४. आवर्जितेत्यादि ॥ स्तनाभ्यां (किञ्चिद् इव) मनाग्मात्रमावर्जिता नामिता। तरुणार्करागं नवोदितरविरक्तं कौसुम्भमम्बरं वसाना परिदधती। अत**श्चोत्प्रेक्षते।** पर्याप्तकुसुमगुच्छावनता सकिसलया च। सञ्चारिणी जङ्गमा लतेव। वने हि लता संभाव्या। प्रत्यक्षमेव च तया दर्शनात् सञ्चारित्वारोपो यथा। 'हिरण्मयी साललतेव जङ्गमा (भट्टिकाव्यम् २-४७) इति भट्टेः ॥ ५४ ॥

५५. स्रस्तामित्यादि ॥ (नितम्बात् स्रस्ताम्) श्रोणीभागाच्चलितां (केसरपुष्प काञ्चीम्) बकुलकुसुमरशनां (पुनः पुनः) असकृदवलम्बमाना उत्क्षिपन्ती। उत् प्रेक्ष्यते। स्थानविदा निक्षेपास्पदज्ञेन स्मरेण मदनेन निजधनुषो द्वितीयां मौर्वी ज्यामिव। न्यासीकृतां निक्षेपं स्थापिताम्। सा हि वैदग्ध्यस्वरूपतारुण्याविर्भावैः स्थानं स्मरनिक्षेपस्य ॥ ५५ ॥

५६. सुगन्धीत्यादि ॥ (लीलारविन्देन) विलासनलिनेन (द्विरेफम्) प्रतिक्षणम् असकृद् (निवारयन्ती) अपास्यन्ती। यतो (बिम्बाधरासन्नचरम्) बिम्बफललोहिते ऽधरे आसन्नं निकटं च चरं च भ्रमन्तम्। कुत इत्याह। (सुगन्धि .... तृष्णम्) सुगन्धौ निश्वासे विवृद्धतृष्णं संजातगन्धं,अत एव ससंभ्रमवशाल्लोलदृष्टिश्चकितेक्षणा सहजत्वात्सौगन्ध्यस्यैकान्तिकत्वे सति सुगन्धीति **'गन्धस्येदु'** (पा.सू.५-४-१३५) इतीत्वम्। बिम्बतुल्योऽधरो बिम्बाधर इति शाकपार्थिवत्वात्समासः। तदेतेन रूपवर्णनेन संवननयोग्यत्वं देव्या दर्शितम्। कुलकम् ॥५६॥

५७. तां वीक्ष्येत्यादि॥ तामेवंविधां गौरीम् (वीक्ष्य) अवलोक्य (पुष्पकेतुः) कुसुमध्वजश्चेतोहरणलक्षणां स्वकर्मसिद्धिं पुनराशशंस समभावयत्। यतः (सर्वावयवानवद्याम्) सर्वेष्ववयवेषु अनवद्यामनिद्यां मनोज्ञाम्, अत एव (रतेः) स्मरवध्वा अपि ह्रीपदं लज्जास्पदम् आदधानां कुर्वन्तीम्। ह्रियः पदं ह्रीपदम्। आशंशसेति। 'शंसु स्तुतौ' (धा.पा. ७२९) इत्यस्य रूपम्, न त्वाङः 'शसि इच्छायाम् (धा. पा. ६२६) इत्यात्मनेपदिनः ॥५७॥





५८. उपासितुमित्यादि ॥ यदैव देवी (पिनाकपाणिम्) भगवन्तं (उपासितुम्) सेवितुं प्रतिहारभूमिं द्वारप्रदेशम् (समाससाद) प्राप तदैव (स) देवोऽपि हृत्पद्मस्थं परं ज्योतिरात्माख्यमालोक्य योगात्समाधेरुपारराम व्यावर्तत। **परमात्मतेजो-दर्शनपर्यन्तं हि योगविधिः।** चशब्दावेककालसूचनार्थौ। एकेन हि समुच्चयमात्रं प्रतीयेत, न तु क्रिययोरेककालता। उपाररामेति **'व्याङ्परिभ्यो रमः** (पा.सू. १-३-८३) **'उपाच्च'** (पा.सू. १-३-८४)। प्रतिहारो द्वारम् ॥५८॥

५९. ततो भुजङ्गेत्यादि ॥ ततो ज्योतिर्दर्शनादनन्तरमीश्वरो निबिडं दृढं पर्यङ्कबन्धमासनविशेषम् अवसक्तिकारचनां बिभेद समापयत्। कीदृशम्। नागनाथस्य शेषाहेः फणाभिः शिरोभिः अधः पाताले कथंचिद्धृतो भूमिभागो येन यत्र वा। तत् गौरवं हि महत्मनां सहजं विशेषतः समाधिसमये भवति। भगवान् कीदृशः। शनैर्न तु सहसा (कृतप्राणविमुक्तिः) कृता प्राणानां वायूनां विमुक्तिस्त्यागो येन सः। समाधौ हि मरुतां निरोधः। भुजङ्गाधिपतिशब्दे राजपुरुष-वत्षष्ठीसमासः॥५९॥

६०. तस्मै शशंसेत्यादि ॥ (शैलसुताम्) सेवार्थमागतां गौरीं प्रणिपत्य हराय नन्दी व्यजिज्ञापयत्। शंसित्वा च तां प्रावेशयत्। यतः शंभोः भ्रूक्षेपमात्रानुमित-प्रवेशाम्। तस्मै इति क्रियाग्रहणं सम्प्रदानत्वम् ॥६०॥

६१. तस्या इत्यादि ॥ ततो देवं प्रणम्य (सखीभ्याम्) वनदेवताभ्यां पार्वतीवय-स्याभ्यां (त्र्यम्बकपादमूले) हरचरणमूले (पल्लवभङ्गभिन्नः) किसलयखण्डमिश्रः कुसुमप्रकारो व्यकीर्यत व्यक्षेपि। कीदृशः। शिशिरात्ययस्य वसन्तस्य स्वहस्तभूतः पाणिनिभः। तन्मयत्वात् तस्य। अत्ययोऽन्तः। **उच्चयशब्दः कवीनां प्रमादजः।** 'हस्तादाने चेरस्तेये' (पा.सू. ३-३-४०) इति घञ्, अचो बाधितत्वात्। भावानयने द्रव्यानयनमित्युच्चितानि पुष्पाणि व्यकीर्यतेत्ययमर्थः। भज्यत इति भङ्गः खण्डः। भिन्नो विशेषितः मिश्रः॥६१॥

६२. उमापीत्यादि ॥ न केवलं सख्यौ यावत् (उमा अपि) पार्वत्यपि (वृषभध्वजाय) वृषकेतुं (मूर्ध्ना प्रणामं चकार) अवन्दत । कीदृशी । (नीलालकमध्यशोभि) कृष्णसीमंतरचितं प्रत्यग्रकर्णिकारकुसुमं प्रणामवशाद्विस्रंसयन्ती चालयन्ती । प्रणामादेव मूर्ध्नः श्रोत्रभ्रष्टकिसलयत्वम् ॥६२॥

६३. अनन्यभाजमित्यादि॥ भवेन शम्भुना अपि प्रणतेरनन्तरं (अनन्यभाजम्) अनन्यसाधारणं (पतिं) भर्तारं (प्राप्नुहि) लभस्व इति सा तथ्यमेव (अभिहिता) उक्ता । तस्याः पश्चात्तेनैवोद्वाहितत्वात् । न चैतदाश्चर्यं यस्मात् (ईश्वरव्याहतयः) ईश्वराणामाढ्यानां समर्थानामुक्तयः पाके फलकाले विपरीतम् अन्यमेव अर्थं न पुष्णन्ति न फलन्ति । देवश्चेश्वरः क्लेशकर्मविपाकदोषैरस्पृष्टत्वात् । अन्यां भजत इत्यन्यभाक्। ततो नञ् समासः ॥६३॥

६४. कामस्त्वित्यादि ॥ गौरीश्वरौ कृतवन्दनाविशेषौ दृष्ट्वा (कामः) मदनः पुनः (बाणावसरं) शरक्षेपसमयं प्रतीक्ष्य (शरासनज्यां) स्वधनुर्मौर्वीं (मुहुः) असकृत् (आममर्श) पस्पर्श। उमासमक्षं (हरबद्धलक्ष्यः) हर एव बद्धं लक्ष्यं येन सः । अत एव (पतङ्गवद्वह्निमुखं) शलभवदग्निवक्त्रं (विविक्षुः) यियासुः। न हि रुद्रे प्रहृत्य स्वास्थ्यम् ॥ ६४ ॥

६५. अथोपनिन्य इत्यादि ॥ अथ ततः (गौरी) देवी (गिरिशाय) स्थाणवे (मन्दाकिनीपुष्करबीजमालां) गंगापद्माक्षवलयं ढौकनिकार्थम् उपनिन्ये अढौकयत्। यतोऽसौ तपस्वी तादृशैरेव वस्तुभिः प्रीयते । ताम्ररुचा लौहित्येनेति अभिलाषप्रतिपादनपरम् । भानुमतः मयूखैः विशोषितामिति स्वरूपकथनमात्रमिदम्। ननु प्रायेण वस्तूपग्रहणं करेण संभवति । तत् किमित करग्रहणम् । सत्यम्, सुखप्रतिपत्तिकृतप्रतिज्ञो भगवान् काव्यकर्ता तत्कथमध्याहारेण वर्तयितुमारभते यतस्तदा बालः संशयीत। अतः सुखप्रतिपत्त्यर्थं प्रतिज्ञाभङ्गभयाद्। किञ्चाध्याहारस्वरूपेणावकथनं स्वरूपोहः प्रायेण व्याकरणेषु दृश्यते न तु काव्येष्वेवं सर्वत्र वेदितव्यम् ॥ ६५ ॥





६६. प्रतिग्रहीतुमित्यादि ॥ ततः प्रणयिप्रियत्वात् प्रियभक्तत्वात् यदैव देवोऽक्षमालां ताम् आदातुमुपचक्रमे प्रारेभे तदैव (पुष्पधन्वा) कामः (धनुषि) कार्मुके (संमोहनं) संमोहनाख्यम् (अमोघं) अवन्ध्यं (बाणं) शरं समधत्त अयोजयत्। पुष्पैर्धनुर्यस्य स पुष्पधन्वा । **उन्मादनसम्मोहनतापनशोषणमारणाख्याः** पञ्चशराः पञ्चशरस्य प्रसिद्धाः ॥६६॥

६७. हरस्त्वियादि ॥ अथः (हरः) भगवान् (उमामुखे) पार्वतीमुखे दृष्टिमक्षिपत्। यतः स्मरशरप्रहारवशात् किञ्चित् परिवृत्तधैर्यः ईषद् चलितगाम्भीर्यः। (चन्द्रोदयारम्भे) शशिकरस्पर्शत्वात् (अम्बुराशिः) उदधिः इव । (बिम्बफलाधरोष्ठे) बिम्बवत् लोहितोऽधरोष्ठो यस्येत्यभिलाषाप्रदर्शनपरं मुखविशेषणम् । अथार्थे तुशब्दः द्विपक्षे मुक्तमर्यादत्वात् ॥६७॥

६८. विवृण्वतीत्यादि ॥ (शैलसुता) गौरी अपि लज्जावशात् मुखेन साचीकृता तस्थौ तिर्यग्भूताऽभवत् । अत एव (पर्यस्तविलोचनेन) पर्यस्ते अधः पतिते लोचने यस्य तेन (चारुतरेण) अतिरम्येण तेनोपसृता, विवृण्वती प्रकटयन्ती भावम् अभिप्रायम् अङ्गैः अवयवैः । यतो रोमाञ्चितत्वात् स्फुटद्बालकदम्बकल्पैः विदलदजरठकदम्बकुसमसदृशैः । रोमाञ्चत्वात् सादृश्यमिति ॥ ६८ ॥

६९. अथेन्द्रियेत्यादि ॥ अथ गोर्याभिलाषकरणं (इन्द्रियक्षोभम्) इन्द्रियविकारमपेक्ष्य (अयुग्मनेत्रः) त्र्यक्षः (वशित्वात्) जितेन्द्रियत्वात् (बलवद्) बलेन निगृह्य वशीकृत्य (स्वचेतोविकृतेः हेतुं) निजमनोविकारकारणं दिदृक्षया (दिशां) ककुभाम् (उपान्तेषु) पर्यन्तेषु दृष्टिं ससर्ज चक्षुरक्षिपत् । बलं विद्यते यत्र तद्बलवन्निग्रहणम् । वशोऽस्यास्तीति वशी शक्तः ॥६९॥

७०. स दक्षिणेत्यादि ॥ ततो भगवान् स (आत्मयोनिं) मनोभवं (ददर्श) ऐक्षत । कीदृशम् । प्रहर्तुमभ्युद्यतम् । अतश्चापकर्षणवशात् (दक्षिणापाङ्गनिविष्टमुष्टिं) दक्षिणेऽपाङ्गे नेत्रपर्यन्ते निविष्टो मुष्टिर्यस्य । (नतांसं) नतो वामांसो

यस्य । (आकुञ्चितसव्यपादम्) आ ईषत् कुञ्चितो वक्रः सव्यो वामः पादो यस्य। (चक्रीकृतचारुचापं) चक्रीकृतं मण्डलितं चारु शोभनं धनुर्येन ॥७०॥

७१. तपःपरामर्शेत्यादि ॥ ततो भगवतोऽस्य (तृतीयादक्षणः) ललाटनेत्रात् स्फुरन् उद्दण्डज्वालो ज्वलन् (उदर्चिः) चलन् (कृशानुः) अनलः (सहसा) झटिति (निष्पपात) निर्जगाम । यतः (तपः परामर्शविवृद्धमन्योः) तपसः परामर्शेन खण्डनेन विवृद्धो दुःसहकोपो यस्य । अतश्च (भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य) भ्रूभङ्गेन भ्रूभेदेन दुर्दर्शनवक्त्रस्य । किलेत्यागमे ॥७१॥

७२. क्रोधमित्यादि॥ (प्रभो) देव (क्रोधं) मन्युं (संहर संहर) प्रशमय क्षमस्वेत्यादि (गिरः) वाचो यावत् (मरुतां) देवानां (खे) आकाशे चरन्ति प्रसस्रुः तावत् एवासौ (भवनेत्रजन्मा) हरनयनभवः (वह्निः) अनलः (मदनं) मन्मथं (भस्मावशेषं चकार) अधाक्षीत् । संहर संहरेति संभ्रमे द्वित्वम् । **चरन्तीति भूतेऽत्र प्रयोगो न न्याय्यः।** यतोऽतीते विहिताभिः परोक्षादिभिर्भाव्यम्। 'न यावदेतावुदपश्यदुत्थितौ' (शिशु.१-१५) इति माघे यावत्तावच्छब्दौ निपातितौ क्रिययोस्तुल्यकालतामाहतुः ॥७२॥

७३. तीव्राभिषङ्गेत्यादि ॥ तदा च (मुहूर्तं) क्षणमात्रं (मोहन) मूर्च्छया (अज्ञातभर्तृव्यसना) अननुभूतपतिविनाशात् रतिः (कृतोपकारा इव) विहितोपकृतेव (बभूव) आसीत् । यतः चक्षुरादीनाम् इन्द्रियाणां वृत्तिं दर्शनादिव्यापारं (संस्तम्भयता) जडीकुर्वता प्रशमयता (तीव्राभिषङ्गप्रभवेण) तीव्रो दुस्सहोऽभिषङ्गोऽभिघातो दुःखं ततः प्रभवो जन्म यस्य तेन ॥७३॥

७४. तमाशु विघ्नमित्यादि ॥ ततोऽसौ (भूतपतिः) गणनाथः (स्त्रीसंनिकर्षं) अङ्गनासमीपं (परिहर्तुकामः) तित्यक्षुः सभूतः गणसहितः अन्तर्दधे तिरोहितो बभूव । तं (तपसः विघ्नं) तपोविघ्नं मदनम् अवभज्य विनाश्य वज्रः अशनिः यथा वनस्पतिं तरुं भिनत्ति। वज्रशब्दोऽर्धर्चादिः ॥७४॥

112



७५. शैलात्मेत्यादि ॥ अथ (शैलात्मजा) पार्वती (शून्या) शून्यचित्ता (भवनाभिमुखी) गृहसम्मुखं (कथञ्चित्) कृच्छ्रेण (जगाम) ययौ । किं कृत्वा। उच्छिरसः उन्नतकन्धरस्य उन्नतचित्तस्य पितुः अभिलाषम् 'ईश्वरायैनां दास्यामि' इति मनोरथं विफलीकृतं (समर्थ्य) विचार्य (आत्मनः) आत्मीयं च ललितं सविलासं (वपुः) देहं व्यर्थं समर्थ्य 'किमेतेन निरर्थकमनोहरेण वपुषा कार्यम्' इति । तथा सख्योः वनदेवतयोः (समक्षं) प्रत्यक्षमेव 'अयं मे पराभवः' इति हेतोः (अधिकजातलज्जा) अधिका जाता लज्जा ह्रीः यस्याः सा । अन्यदर्शने हि तथा परिभवो हृदयमाक्रामति । संपूर्वस्यार्थयतेः समर्थ्येति रूपम् । वसन्ततिलकावृत्तम् ॥७५॥

७६. सपदीत्यादि ॥ तत एवंविधं वृत्तान्तमवगम्य (अद्रिः) हिमवान् अनुकम्प्यां लालनीयां (दुहितरं) सुतां (दोर्भ्याम्) बाहुभ्याम् (आदाय) गृहीत्वा प्रतिपथगतिरासीत् प्रतीपगामी बभूव गृहानुपययौ इत्यर्थः। कीदृशीं ताम् । (रुद्रसंरम्भभीत्या) शर्वक्षोभत्रासात् मुकुलिताक्षीं सङ्कुचितनेत्राम् अत एव (अनुकम्प्याम्) अनुकम्पायोग्याम् । सुरगजः ऐरावणः (दन्तलग्नां) विषाणधृतां (पद्मिनीं) नलिनीं (बिभ्रत्) उद्वहन् यथा प्रतिपथगतिर्भवत्येवमद्रिराजोऽभूत् । पद्मिनीशब्दनैवमादौ पद्मान्येव तात्स्थ्यादुच्यन्ते । पथ आभिमुख्येन प्रतिपथम् । 'ऋक्पूरब्धूः पथमानक्षे' (पा.सू. ५-४-७४) । प्रतिपथं गतिर्यस्य स तथोक्तः । वेगेन क्षोभेन दीर्घीकृतं प्रसारितमिवाङ्गं वपुर्येन । अथ च वेगदीर्घीकृतः आत्मा येन सः । मालिनीवृत्तम् ॥७६॥

* * * * *



## అనుబంధం-2

శ్రీః

# కుమారసంభవమహాకావ్యము

### తృతీయసర్గలోని లోకోక్తులు

1. *ప్రయోజనాపేక్షితయా ప్రభూణాం*
*ప్రాయశ్చలం గౌరవ మాశ్రితేషు॥* 1

2. *సమీరణో నోదయితా భవేతి*
*వ్యాదిశ్యతే కేన హుతాశనస్య?* 2

3. *ఆత్మేశ్వరాణాం న హి జాతు విఘ్నాః*
*సమాధిభేదప్రభవో భవన్తి॥* 3

4. *న హీశ్వరవ్యాహృతయః కదాచి -*
*త్పుష్ణన్తి లోకే విపరీతమర్థమ్॥* 4



*****



## అనుబంధం-3

# కుమారసంభవమహాకావ్యం - వివరణ పదసూచి

### తృతీయః సర్గః



*****

## అనుబంధం-4
# కుమారసంభవమహాకావ్యము - పూర్వకథ
## ప్రథమసర్గ

భారతదేశమునకు ఉత్తరమున హిమవంతుడను పర్వతరాజు కలడు. ఆయన దేవతాస్వరూపుడు. ఆయన భార్య మేన. ఆ దంపతుల కుమారుడు మైనాకుడు. కూతురు పార్వతి. పూర్వజన్మమునం దామె సతి. దక్షప్రజాపతి కుమార్తె. శంకరుని భార్య. బాల్యము గడచి పార్వతికి వివాహము చేయదగిన వయస్సు వచ్చెను. ఒకనాడు నారదమహర్షి హిమవంతుని చూడవచ్చెను. ఆయన పార్వతిని చూచి 'ఈమె శివునే పతిగా బడయు' నని పలికెను. ఆయన వచనముపై విశ్వాసముచే హిమవంతుడు పార్వతికై వేఱు వివాహ ప్రయత్నమేమియు చేయకుండెను. ఇది యిట్లుండగా, సతీవియోగము నొందిన శంకరుడు హిమవత్పర్వతమందలి యొక శిఖరము నధిరోహించి యచట తపము చేయసాగెను. హిమవంతున కా వార్త తెలిసెను. తోడనే ఆయన, చెలులిద్దరు తోడురాగా తన కూతురు పార్వతిని శివపరిచర్యకై నియోగించెను.

## ద్వితీయసర్గ

స్వర్గమున తారకాసురునిచే పీడితులైన దేవత లెల్లరును, బ్రహ్మకడకేగిరి. వా రాయనను యుక్తములగు స్తోత్రములచే పొగడి, పిమ్మట తమ క్లేశములను తెలియజేసిరి. తారకు డను రాక్షసుడు బ్రహ్మను తపముచే మెప్పించి, వరము పొంది, గర్వించి, దేవతలను తనకు సేవచేయుడని నిర్బంధించెను. దేవేంద్రునివంటి మహాబలసమన్వితుడు కూడా తారకుని ముందు నిర్వీర్యుడయ్యెను. అట్టి యా రాక్షసుని పరిమార్పగలవాడు శంకరుని తనయుడొక్కడే. కాని శంకరుని కానాటికి సంతానము లేదు. అందుచే శివునకు కుమారుడు కలుగుటే తమ లక్ష్యసిద్ధికి మార్గమని దేవతలు భావించిరి. బ్రహ్మయు హిమవంతుని కూతురు పార్వతియే శివునికి తగిన యిల్లాలనియు, వారి వివాహము జరిగినచో దేవకార్యము నెఱవేరుననియు దేవతల కెఱింగించెను.



## తృతీయసర్గ

తపము చేయుచున్న శంకరునకు పార్వతిపై అనురాగము కలిగించి, శంకరు డామెను వివాహమాడునట్లు చేయుటకై దేవేంద్రుడు మన్మథుని నియోగించెను. మన్మథుడు దేవకార్యము చేపట్టి, వసంతుడను తన మిత్రుని వెంటబెట్టుకొని శివుని తపోవనమునకు పోయెను. పార్వతి యచట చెలులతో గూడి శివుని సేవించు చుండెను. మన్మథుడు ప్రవేశించగనే తపోవనపు రూపురేఖలే మారిపోయెను. వృక్షములు, మొక్కలు ఆమూలాగ్రము చిగిర్చెను. అకాలమయ్యును భూమి పచ్చిక యను సుందరమగు వలువ ధరించెను. వనచారులగు మృగములును, గగనచారులగు పక్షులును గూడ మదనపారవశ్యము నొందెను. తుదకు తపస్వులు సైతము తమ ఇంద్రియముల నదుపులో నుంచుకొనుటకు శ్రమపడవలసి వచ్చెను. ఆకస్మికమగు వసంతాగమనము, సుందరాంగి పార్వతి చెంతనుండుటయు క్షణకాలము శంకరుని తపస్సమాధికి కూడా భంగము కలిగించెను. ఒక్క క్షణములోనే శివుడా పరిణామమును నిగ్రహించుకొనెను. తనకు కలిగిన యా మనోవికారమునకు కారణమైన మన్మథునిపై ఆయనకు పట్టరాని కోపము కలిగెను. తోడనే ఆయన నొసటి కంటిమంటలు మన్మథుని భస్మము కావించెను. శివుడును వెనువెంటనే యటనుండి తిరోహితు డయ్యెను. ఈ యతర్కిత పరిణామమునకు భయపడిన హిమవంతుడు తన కూతును వేఱొక సురక్షిత ప్రదేశమునకు మఱలించెను.

**– చలమచర్ల వేఙ్కటశేషాచార్యులు**

– – – –

## అనుబంధం-5

### श्रीः

# कुमारसम्भवमहाशिवपुराणयोः

## साम्यनिदर्शकः संदर्भः

| कुमारसंभवम् | महाशिवपुराणम् (पार्वतीखण्डम्) |
|---|---|
| **आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति। अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते ।** | **काम उवाच —** किं कार्यं ते समुत्पन्नं स्मृतोऽहं केन हेतुना? तत्त्वं कथय देवेश । तत्कर्तुं समुपागतः। |
| **केनाभ्यसूयापदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः। यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती ।** | पदं ते कर्षितुं यो वै तपस्तपति दारुणम् । पातयिष्यामहं तं च शत्रुं ते मित्र! सर्वथा । **क्षणेन भ्रंशयिष्यामि कटाक्षेण वरस्त्रियाः।** देवर्षिदानवादींश्च नराणां गणना न मे । वज्रं तिष्ठतु दूरे वै शस्त्राण्यन्यान्यनेकशः। पंचैव मृदवो बाणास्ते च पुष्पमया मम । चापस्त्रिधा पुष्पमयः शिंजिनी भ्रमरार्जिता । |
| **तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।** | **बलं सुदयिता मे हि वसंतः** सचिवः स्मृतः। अहं पंचबलो देवो मित्रं मम सुधानिधिः। |



| कुमारसंभवम् | महाशिवपुराणम् (पार्वतीखण्डम्) |
|---|---|
| **कुर्यां हरस्यापि पिनाकपाणे- र्धैर्यच्युतिं के मम धन्विनोऽन्ये।** | किं ते कार्यं करिष्यन्ति मयि मित्र! उपस्थिते। **ब्रह्माणं वा हरिं वापि भ्रष्टं कुर्यां न संशयः।** |
| **अथोरुदेशादवतार्य पादमा- क्रान्तिसंभावितपादपीठम् । संकल्पितार्थे विवृतात्मशक्ति- माखण्डलः काममिदं बभाषे।** | **अन्येषां गणना नास्ति पातयेयं हरं त्वपि ।** इत्येवं तु वचस्तस्य श्रुत्वा **शक्रः सुहर्षितः।** **उवाच** प्रणमन्वाचा **कामं** कांतासुखावहम् । |
| | **शक्र उवाच —** |
| **सर्वं सखे! त्वय्युपपन्नमेत- दुभे ममास्त्रे कुलिशं भवांश्च। वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च।** | मित्राणि मम संत्येवं बहूनि सुमहांति च । परं तु स्मर। सन्मित्रं त्वत्तुल्यं न हि कुत्रचित्। **जयार्थं मे द्वयं** तात । निर्मितं वज्रमुत्तमम् । |
| **अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये। व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः। तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व। योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम्।** | **वज्रं च निष्फलं स्याद्वै त्वं तु नैव कदाचन।** केनापि नैव तच्छक्यं दूरीकर्तुं त्वया विना । दातुः परीक्षा दुर्भिक्षे रणे शूरस्य जायते । आपत्काले तु मित्रस्याशक्तौ स्त्रीणां कुलस्य हि। यत्कार्यं मनसोद्दिष्टं मया तात मनोभव। कर्तुं तत्त्वं समर्थोऽसि नान्यस्मात्तस्य संभवः। तारकाख्यो महादैत्यो ब्रह्मणो वरमद्भुतम् । अभूदजेयः संप्राप्य सर्वेषामपि दुःखदः। |
| **अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः। स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा।** | एतस्य मरणं **प्रोक्तं प्रजेशेन** दुरात्मनः। **शम्भोर्वीर्योद्भवाद्बालान्**महायोगीश्वरस्य हि। एतत्कार्यं त्वया साधु कर्तव्यं सुप्रयत्नतः। शंभुः स गिरिराजे हि तपः परममास्थितः। |

**गुरोर्नियोगाच्च नगेन्द्रकन्या**
**स्थाणुं तपस्यन्तमधित्यकायाम्।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः**
**श्रुतं मया मत्प्रणिधिः स वर्गः।**
**तस्मिन्सुराणां विजयाभ्युपाये**
**तवैव नामास्त्रगतिः कृती त्वम्।**
**अप्यप्रसिद्धं यशसे हि पुंसा-**
**मनन्यसाधारणमेव कर्म ।**
**सुराः समभ्यर्थयितार एते**
**कार्यं त्रयाणामपि विष्टपानाम्।**

तत्समीपे च देवार्थं पार्वती स्वसखीयुता । सेवमाना तिष्ठतीति **पित्राज्ञप्ता** मया श्रुतम्। यथा **तस्यां रुचिस्तस्य** शिवस्य नियतात्मनः। जायते नितरां मार! तथा कार्यं त्वया ध्रुवम्। लोके स्थायी प्रतापस्ते भविष्यति न चान्यथा। इति कृत्वा कृती स्यास्त्वं सर्वं दुःखं विनंक्ष्यति। अग्रहीत्तरसा कामः शिवमायाविमोहितः। यत्र योगीश्वरः साक्षात्तप्यते परमं तपः। **जगाम** तत्र सुप्रीतः सदारः सवसंतकः।

**चापेन ते कर्म न चातिहिंस्त्र-**
**महो! बतासि स्पृहणीयवीर्यः ।**
**स माधवेनाभिमतेन सख्या**
**रत्या च साशङ्कमनुप्रयातः।**
**अङ्गव्ययप्रार्थितकार्यसिद्धिः**
**स्थाण्वाश्रमं हैमवतं जगाम ।**
**असूत सद्यः कुसुमान्यशोकः**
**स्कन्धात्प्रभृत्येव सपल्लवानि ।**

वसंतः स च यो धर्मः प्रससार स सर्वतः। तपःस्थाने महेशस्योषधिप्रस्थे मुनीश्वर! । वनानि च प्रफुल्लानि पादपानां महामुने ।

**पादेन नापैक्षत सुन्दरीणां**
**संपर्कमासिञ्जितनूपुरेण ।**
**वर्णप्रकर्षे सति कर्णिकारं**
**दुनोति निर्गन्धतया स्म चेतः।**
**प्रायेण सामग्र्यविधौ गुणानां**
**पराङ्मुखी विश्वसृजः प्रवृत्तिः।**

**पुष्पाणि सहकाराणामशोक**वनिकासु वै । विरेजुः सुस्मरोद्दीपकराणि सुरभीण्यपि ।





**तस्मिन्वने संयमिनां मुनीनां**
**तपःसमाधेः प्रतिकूलवर्ती।**
**संकल्पयोनेरभिमानभूत-**
**मात्मानमाधाय मधुर्जजृम्भे ।**
**लग्नद्विरेफाञ्जनभक्तिचित्रं**
**मुखे मधुश्रीस्तिलकं प्रकाश्य।**
**रागेण बालारुणकोमलेन**
**चूतप्रवालोष्ठमलंचकार।**
**मधु द्विरेफः कुसुमैकपात्रे**
**पपौ प्रियां स्वामनुवर्तमानः।**
**शृङ्गेण च स्पर्शनिमीलिताक्षीं**
**मृगीमकण्डूयत कृष्णसारः।**

तत्र गत्वा स्मरो गर्वी शिवमायाविमोहितः। एवं वसंतविस्तारो मदनावेशकारकः। वनौकसां तदा तत्र मुनीनां दुःसहोऽत्यभूत्। कैरवाणि च पुष्पाणि भ्रमराकलितानि च । बभूवुर्मदनावेशकराणि च विशेषतः।

**श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्**
**हरः प्रसंख्यानपरो बभूव ।**
**आत्मेश्वराणां न हि जातु विघ्नाः**
**समाधिभेदप्रभवो भवन्ति ।**
**कामस्तु बाणावसरं प्रतीक्ष्य**
**पतङ्गवद्वह्निमुखं विविक्षुः।**
**उमासमक्षं हरबद्धलक्ष्यः**
**शरासनज्यां मुहुराममर्श।**
**दृष्टिप्रपातं परिहृत्य तस्य**
**कामः पुरः शुक्रमिव प्रयाणे ।**
**प्रान्तेषु संसक्तनमेरुशाखं**
**ध्यानास्पदं भूतपतेर्विवेश ।**
**सदेवदारुद्रुमवेदिकायां**
**शार्दूलचर्मव्यवधानवत्याम् ।**

यदा चाप्राप्तविवरस्तस्मिन्योगिवरे स्मरः। महादेवस्तदा सोऽभून्महाभयविमोहितः। एतस्मिन्नन्तरे तत्र सखीभ्यां संयुता शिवा। जगाम शिवपूजार्थं नीत्वा पुष्पाण्यनेकशः। यदा शिवसमीपे तु गता सा पर्वतात्मजा । तदैव शंकरो ध्यानं त्यक्त्वा क्षणमवस्थितः। तच्छिद्रं प्राप्य मदनः प्रथमं हर्षणेन तु । बाणेन हर्षयामास पार्श्वस्थं चन्द्रशेखरम् । शृङ्गारैश्च तदा भावैः सहिता पार्वती हरम् । जगाम कामसाहाय्ये मुने! सुरभिणा सह ।

**आसीनमासन्नशरीरपात-**
**स्त्रियम्बकं संयमिनं ददर्श ।**
**भविष्यतः पत्युरुमाच शंभोः**
**समाससाद प्रतिहारभूमिम् ।**
**योगात्स चान्तः परमात्मसंज्ञं**
**दृष्ट्वा परं ज्योतिरुपारराम ।**
**विवृण्वती शैलसुतापि भाव-**
**मङ्गैः स्फुरद्बालकदम्बकल्पैः।**
**साचीकृता चारुतरेण तस्थौ**
**मुखेन पर्यस्तविलोचनेन ।**
**मध्येन सा वेदिविलग्नमध्या**
**वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं नवयौवनेन**
**कामस्य सोपानमिव प्रयुक्तम् ।**
**अन्योन्यमुत्पीडयदुत्पलाक्ष्याः**
**स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।**
**मध्ये यथा श्याममुखस्य तस्य**
**मृणालसूत्रान्तरमप्यलभ्यम् ।**
**प्रतिग्रहीतुं प्रणयिप्रियत्वा -**
**त्त्रिलोचनस्तामुपचक्रमे च ।**
**संमोहनं नाम च पुष्पधन्वा**
**धनुष्यमोघं समधत्त बाणम् ।**
**हरस्तु किंचित्परिलुप्तधैर्य-**
**श्चन्द्रोदयारम्भ इवाम्बुराशिः।**
**उमामुखे बिम्बफलाधरोष्ठे**
**व्यापारयामास विलोचनानि ।**
**अथेन्द्रियक्षोभमयुग्मनेत्रः**
**पुनर्वशित्वाद्बलवन्निगृह्य ।**

सुसंस्मृत्य वरं तस्यां विधिदत्तं पुरा प्रभुः।
शिवोऽपि वर्णयामास तदंगानि मुदा मुने! ।
स्त्रीस्वभावाच्च सा तत्र लज्जिता दूरतो गता ।
विवृण्वती निजांगानि पश्यंती च मुहुर्मुहुः।
सुवीक्षणैर्महामोदात्सुस्मिताभूच्छिवा मुने! ।
एवं चेष्टा तदा दृष्ट्वा शम्भुर्मोहमुपागतः।
तदैवाकृष्य तच्चापं रुच्यर्थं शूलधारिणः।
द्रुतं पुष्पशरं तस्मै स्मरोऽमुञ्चत्सुसंयतः।
तन्नमस्कृत्य तत्पूजां कृत्वा तत्पुरतः स्थिता।
सा दृष्ट्वा पार्वती तत्र प्रभुणा गिरिशेन हि ।
विवृण्वती तदांगानि स्त्रीस्वभावात्सुलज्जया ।

उवाच वचनं चैवं महालीलो महेस्वरः । अस्या दर्शनमात्रेण महानंदो भवत्यलम्। यदालिंगन-मेतस्याः कुर्यां किन्तु ततः सुखम्। क्षणमात्रं विचार्येत्थं संपूज्य गिरिजां ततः। प्रबुद्धः स महायोगी सुविरक्तो जगाविति ।

**शिव उवाच —**

किमु विघ्नाः समुत्पन्नाः कुर्वतस्तप उत्तमम् ।
केन मे विकृतं चित्तं कृतमत्र कुकर्मिणा ।





**हेतुं स्वचेतोविकृतेर्दिदृक्षु-**
**र्दिशामुपान्तेषु ससर्ज दृष्टिम् ।**
**स दक्षिणापाङ्गनिविष्टमुष्टिं**
**नतांसमाकुञ्चितसव्यपादम् ।**
**ददर्श चक्रीकृतचारुचापं**
**प्रहर्तुमभ्युद्यतमात्मयोनिम् ।**
**तपः परामर्शविवृद्धमन्यो**
**र्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।**
**स्फुरन्नुदर्चिः सहसा तृतीया-**
**दक्ष्णः कृशानुः किल निष्पपात।**
**क्रोधं प्रभो! संहर संहरेति**
**यावद्गिरः खे मरुतां चरन्ति ।**
**तावत्स वह्निर्भवनेत्रजन्मा**
**भस्मावशेषं मदनं चकार ।**
**तीव्राभिषङ्गप्रभवेण वृत्तिं**
**मोहेन संस्तम्भयतेन्द्रियाणाम् ।**
**अज्ञातभर्तृव्यसना मुहूर्तं**
**कृतोपकारेव रतिर्बभूव ।**
**शैलात्मजापि पितु-**
**रुच्छिरसोऽभिलाषं**
**व्यर्थं समर्थ्य**
**ललितं वपुरात्मनश्च।**
**सख्योः समक्षमिति**
**चाधिकजातलज्जा**
**शून्या जगाम भवना-**
**भिमुखी कथंचित् ।**

विचिंत्येत्थं महायोगी परमेशः सतां गतिः।
दिशो विलोकयामास परितः शंकितस्तदा ।
वामभागे स्थितं कामं ददर्शाकृष्टबाणकम् ।
स्वशरं क्षेप्तुकामं हि गर्वितं मूढचेतसम्। तं
दृष्ट्वा तादृशं कामं गिरिशस्य परात्मनः ।
संजातः क्रोधसंमर्दस्तत्क्षणादपि नारदः!।
चकम्पे च पुरः स्थित्वा दृष्ट्वा मृत्युञ्जयं प्रभुम्।
स्तुतिं कुर्वत्सु देवेषु क्रुद्धस्याति हरस्य हि ।
तृतीयात्तस्य नेत्राद्वै निःससार ततो महान् ।
ललाटमध्यगात्तस्मात् स वह्निर्द्रुतम्भवः।
जज्वालोर्ध्वशिखो दीप्तः प्रलयाग्निसमप्रभः।
भस्मसात्कृतवान्साधो! मदनं तावदेव हि ।
यावच्च मरुतां वाचः क्षम्यतां क्षम्यतामिति ।
श्वेतांगा विकृतात्मा च गिरिराजसुता तदा ।
जगाम मन्दिरं स्वं च समादाय सखीजनम्।
क्षणमात्रं रतिस्तत्र विसंज्ञा साभवत्तदा ।
भर्तृमृत्युजदुःखेन पतिता सा मृता इव ।
जातायां चैव संज्ञायां रतिरत्यंतविह्वला ।

विललाप तदा तत्रोच्चरन्ती विविधं वचः।

**रतिरुवाच —**

किं करोमि क्व गच्छामि किं कृतं दैवतैरिह।

*****

## అనుబంధం-6

# श्लोकानुक्रमणिका

## (तृतीयः सर्गः)

## ఉపయుక్తగ్రన్థసూచి

1) మేఘదూతమ్ - మృణాళినీ వ్యాఖ్య
2) కుమారసమ్భవమ్ - పుంసవనీ వ్యాఖ్య
3) కుమారసమ్భవమ్ - ప్రకాశికా మరియు వివరణం వ్యాఖ్య
4) అష్టాధ్యాయీ సూత్రపాఠః - ప్రహ్లాద టిప్పణి - కృష్ణదాస్ అకాడమి - 2001.
5) Practical Sanskrit - English Dictionary - 3 Volumes - Apte.
6) హలాయుధ కోశః - ఉత్తరప్రదేశ్ హిందీసంస్థాన్ - 1993.
7) ఉణాదికోశః - యుధిష్ఠరమీమాంసకః - 2000
8) సంస్కృతధాతుసాగరతరణిః - మద్రాస్ పబ్లికేషన్.
9) అభిధానచిన్తామణిః - చౌఖాంబా - 1996
10) అమరకోశః - గురుబాలప్రబోధికా - వావిళ్ల ప్రచురణ.
11) అవ్యయకోశః - The Sanskrit Educational Society, Madras - 1971
12) సంకేతపదకోశము - డా॥ రవ్వా శ్రీహరి - పతంజలి పబ్లికేషన్స్ - 2002.
13) బృహద్ధాతుకుసుమాకరః - హరేకాన్తమిశ్రా - చౌఖాంబా - 2003.
14) బృహచ్ఛబ్దకుసుమాకరః - హరేకాన్తమిశ్రా - చౌఖాంబా - 2003.
15) సంస్కృతవ్యాకరణమ్ - శ్రీ ఆర్.వి.ఆర్.కె. శాస్త్రి - కృష్ణానందమఠం - 1997
16) పుష్పబాణవిలాసః - వేదం వారి ప్రచురణ - 1931
17) అమరుకావ్యమ్ - వేదం వారి ప్రచురణ - 1931
18) మనుస్మృతి - గాయత్రీ ప్రచురణ - 2003
19) తర్కశాస్త్రం - వ్యాఖ్యాత - డా॥ రామానుజాచార్య - 1991
20) భర్తృహరి సుభాషితములు - వావిళ్ల ప్రచురణ.
21) యోగదర్శనమ్ - బాలానందినీ వ్యాఖ్య - ఆర్షవిజ్ఞాన ట్రస్ట్.
22) శ్రీమద్రామాయణం - బాలానందినీ వ్యాఖ్య - ఆర్షవిజ్ఞాన ట్రస్ట్.
23) ఋతుసంహారః - మృణాళినీ వ్యాఖ్య - రామోరా - 2004
24) రఘువంశమ్ - వావిళ్ల ప్రచురణ - 1926.
25) రఘువంశమ్ - పబ్లిషర్ ఆర్.సి. శాస్త్రి - 2004.
26) కుమారసంభవమ్ - వేదం వారి ప్రచురణ - 1943
27) కుమారసంభవమ్ - పబ్లిషర్ ఆర్.సి. శాస్త్రి - 2003.
28) ఘటకర్పరకావ్యమ్ - మఞ్జరీ వ్యాఖ్య - రామోరా, దుర్గానంద - 2003.
29) శిశుపాలవధమ్ - కృష్ణదాస్ అకాడమి - 1998
30) మాఘకావ్యమ్ - వావిళ్ల ప్రచురణ - 1967
31) కావ్యాదర్శః - బాలానందినీవ్యాఖ్యా



32) కావ్యాదర్శః - చౌఖాంబా - 2001
33) ఏకావళి - మాధవీయ వివృతి - అభినవభారతి ప్రచురణ - గుంటూరు.
34) కావ్యప్రకాశము - బాలానందినీవ్యాఖ్య - సంస్కృతభాషాప్రచారసమితి.
35) ప్రతారుద్రీయయశోభూషణమ్ - వావిళ్ల ప్రచురణ - 1965
36) సాహిత్యదర్పణమ్ - కృష్ణదాస్ అకాడమి - 2005
37) దశరూపకమ్ - చౌఖాంబా - 1987
38) ధ్వన్యాలోకమ్ - బాలానందినీవ్యాఖ్యా - శ్రీజయలక్ష్మీ పబ్లికేషన్స్ - 1998
39) శబ్దమంజరీ - శ్రీ జయలక్ష్మీ పబ్లికేషన్స్ - 2001
40) భగవద్గీత - గీతాప్రెస్.
41) శ్రీమద్భాగవత మహాపురాణమ్ - గీతాప్రెస్.
42) నైషధీయచరితమ్ - నారాయణీయమ్ వ్యాఖ్యా.
43) నైషధీయచరితమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి ప్రచురణ.
44) A Classical Dictionary of Hindu Mythology and Religion - J. Dowson.
45) The Kiratarjuneeyam of Bharavi - M.R. Kale. - Banarsidas Pub.
46) దశకుమారచరితమ్-1 - వేదంవారి ప్రచురణ - 1994
47) సూర్యశతకము - బాలప్రభ - డా॥ తాళ్లూరి - 1990
48) ప్రసన్నరాఘవమ్ - చౌఖాంబా - 1972
49) సిద్ధాంతకౌముదీ - నిర్ణయ్‌సాగర్ ప్రెస్ - 1929.
50) అష్టాధ్యాయీ పదానుక్రమకోశః - పరిమళ పబ్లికేషన్స్ - 1996.
51) గీతగోవిందకావ్యము - వావిళ్ల ప్రచురణ - 1993
52) కిరాతార్జునీయమ్-1 - శ్రీ పరమేశ్వర పబ్లికేషన్స్.
53) కిరాతార్జునీయమ్-3 - సంస్కృతభాషా ప్రచార సమితి.
54) భామినీవిలాసః - సురభారతీ ప్రకాశమ్ - 2000
55) విక్రమోర్వశీయమ్ - సంస్కృత అకాడమి - ఓ.యు., హైదరాబాద్.
56) విక్రమోర్వశీయమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
57) మాళవికాగ్నిమిత్రమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
58) అభిజ్ఞానశాకున్తలమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
59) అభిజ్ఞానశాకున్తలమ్ - పబ్లిషర్ నోరి భోగీశ్వరశర్మ - 2002
60) నాగానందమ్ - శిరోమణివ్యాఖ్య - తెలుగు విశ్వవిద్యాలయం - 2001.
61) ఉత్తరరామచరితమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి - 1965
62) ఉత్తరరామచరితమ్ - చౌఖాంబా - 2003
63) మాలతీమాధవమ్ - యం.ఆర్. కాలే - బనారసీదాస్ - 1997.

64) మృచ్ఛకటికమ్ - డా॥ బేతవోలు రామబ్రహ్మం - 2005.
65) ముద్రారాక్షసమ్ - ఆర్.డి. కర్మార్కర్ - చౌఖాంబా.
66) ముద్రారాక్షసమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి,
67) వేణీసంహారమ్ - డా॥ బేతవోలు రామబ్రహ్మం-తెలుగు విశ్వవిద్యాలయం - 1988
68) కావ్యాలంకారః - భామహవిరచితః - బా.వ్యా.-సంస్కృతభాషాప్రచారసమితి- 2004
69) సరస్వతీకంఠాభరణమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి - 1984
70) వక్రోక్తిజీవితమ్ - బాలానందినీవ్యాఖ్యా
71) పాణినివిరచితాఅష్టాధ్యాయీ - 2 భాగములు - చౌఖాంబా - 2004.
72) పంచతంత్రం-1 & 2 - సంస్కృతభాషాప్రచారసమితి - 1988.
73) హితోపదేశమ్ - సంస్కృతభాషాప్రచారసమితి
74) శ్రీ విష్ణుసహస్రనామస్తోత్రమ్ - ఆంధ్రానువాదము - శ్రీ న.చ.రఘునాథాచార్యులు.
75) బృహత్స్తోత్రరత్నాకరః - వావిళ్ల ప్రచురణ.
76) సర్వశబ్దః - ఏ.యి.యస్. పబ్లికేషన్ - 2004
77) శబ్దసాగర్ - చౌఖాంబా - 2004
78) రసగంగాధరమ్ - (అనువాదము) ధరణికోట వెంకటసుబ్బయ్య.
79) లఘుసిద్ధాంతకౌముదీ - బాలానందినీవ్యాఖ్య - సంస్కృతభాషాప్రచారసమితి.
80) అమరుకకావ్యమ్ - మనసిజవ్యాఖ్య - సాధన గ్రంథ మండలి, తెనాలి.
81) కిరాతార్జునీయమ్ - వావిళ్ల ప్రచురణ.
82) రత్నావళి - చౌఖాంబా ప్రచురణ.
83) చమత్కారచంద్రికా - ఆంధ్రవిశ్వవిద్యాలయ ప్రచురణ, వాల్టేర్ - 1969
84) శ్రీమహాభారతమ్ - వావిళ్ల ప్రతి - 1931

- - -

# శ్రీః





## ధన్యవాదములతో...
## మీ ... రా మో రా